का॰म॰ श्रीगणेशाय नमः ब्रह्मोवाच॰ कदाचित्सुप्रसन्नोभूद्देदेधर्मोमहामतिः शिष्यायसुविनीतायवरदा
१ नमचिन्तमन् १ वेदधर्मोवाच॰ दीपकागच्छभद्रंतेवरंवरयसुव्रत त्वयाहंतोषितःसम्यक्सेवया
चानयानघ २ एवमेकाग्रचित्तानांश्रद्धयाहृपसेविनाम् मृदःसर्वोमहाभागसिद्धयोष्टौभवंतिहि
३ नदेवापर्वताग्रेषुनदेवोविष्णुसद्मनि देवश्चिदानंदमयोहृदिभावेनदृश्यते ४ यत्नकुन्नदृढा
भक्तिर्यदायस्यमहात्मनः तन्नतन्नमहादेवप्रकाशमुपगच्छति ५ अहोतातमहाभागप्रसन्नोहंत
वानघ येनत्वचित्तकुहरःसाधिताःसिद्धयःशुभाः ६ दीपकउवाच॰ संतोषेणतवाद्याहंकृता
र्थःसद्गुरोर्मतः जातोस्मिभगवंच्छ्रद्धस्त्वत्सेवकइतिश्रुतः ७ किंचिद्विज्ञप्तुकामोहमाज्ञापयति राम॰
चेद्गुरुः पृच्छामिसंदिग्धपदंपरमाश्चर्यकारणम् ८ गुरुरुवाच॰ पृच्छदीपकभद्रंतेनावक्तव्यंत्व १
यिकेचित यस्यतेगुरुभक्त्यैवदेवदेवाःप्रसाधिताः ९ शिष्यउवाच॰ त्वंसाक्षात्तपसांमूर्तिर्धर्मवे

का०म० स ब्रह्मभूयात् ७४ शिष्यउवाच० अन्यत्रयेमृतास्तेवाज्जीवास्तेषांयदिप्रभो कीकसंप्रपतेदत्रतेषांका
५ गतिरुच्यते ७५ गुरुरुवाच० अन्यत्रपतितानांतुजीवानांकीकसंयदि वाराणस्यांप्रपततिनरकंनयत
निते ७६ स्वर्गंदुःखातिनःपापा अपिगच्छन्तिनान्यथा अस्थिकेशनखामांसंयदिकाश्यांपतेदिह
७७ महापापास्तदास्वर्गंयांतिसाह्नवत्सरान् पुनःकाशीसमासाद्यमुक्ताःस्युःसर्वजंतवः ७८ ॥
४ शिष्यउवाच० अहोमाहात्म्यमतुलंकाश्याःपापाशनेश्रुतम् महानुभावाऋषयःपण्डिताःशुद्धबुद्धयः
७९ वसंतिकाशींनकथंतपसःफलरूपिणीम् याह्निभागीरथीतीरेअर्द्धचंद्राकृतिःकृता ८० केशवे
नम ह्यधुन्यानुप्यदाभोसदास्मृता तच्छ्रोतुमहमिच्छामिविष्णुनाशिवसात्कृता ८१ गुरुरुवाच० का०म०
शृणुवत्समहाश्रान्तकथांपापापनोदिनीम् यस्याःश्रवणमात्रेणकाशिकाकाशिकाभवेत् ८२ वाराह ५
कालेमहत्यंतहृदागतवानघ करावस्थितमग्नाप्रलयाब्धौतलंगता ८३ महर्जनस्तपोलोक।

न्नणामिह लसुण्यं कोटिगुणितं मणिकर्ण्यैकमज्जनात् ६५ अन्यत्र ब्राह्मणानां तु कोटिं संभोज्य यत्
फलम् वाराणस्यां मुदैकेन भोजितेन लभ्यते ६६ दिनैनैकेन यच्छ्रेयो हेलया लभ्यते त्र यत् वर्षाणां तु
शतेनापि तदन्यत्र न लभ्यते ६७ यः स्तौति स्मरते काशीं यः कीर्त्तयति मानवः तेन तप्तं हुतं जप्तं कृतं।
ध्यानमहर्निशम् ६८ महापातकयुक्तोपि मिश्र द्वाविरक्तोपिहि काशीप्रवेशादनघः सम्यक्स्थित्वा सु
खी भवेत् ६९ अस्मिन्कलियुगे घोरे लोकाः पापानुवर्त्तिनः भविष्यंति महाबुद्धे वर्णाश्रमविवर्जिताः
७० नान्यत्तस्यास्ति जंतूनां मुक्त्वा वाराणसीं पुरीम् सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ७१ कलौ वि
श्वेश्वरो देवः कलौ वाराणसी पुरी कलौ भागीरथी गंगा दानं कलियुगे महत् ७२ निंदंति न कलिं धीरा
विजितेंद्रियमानसाः भगवद्भजनेरक्ताः सक्ता धर्मैष्वनुक्षणम् ७३ कलिमलमपहर्तुं काशिकाकाश
तेसो स्म रहरहसि सर्ववल्ल विश्रामभूमिः न हि विरमति तस्मिलोदुःखमाप्नोति किंचिज्जननशतसहस्रैर्दुर्द

राम॰ तेगगनेचरम् तदिदं परमं ज्योतिः काशीति प्रथितं श्रुतौ ९५ रत्नं सुवर्णैरवचितं यथा भवेत्तथा पृथि
६ व्यां रचिता हि काशिका नकाशिकाभूमिमयी कदाचित्ततो न मज्जत्यसहस्रतोयत ९६ जडेषु सर्वेष्व
पि मज्जमानेष्वियं चिदानंदमयी निमज्जति स्वयं निमग्नः कथमुद्धरेत्परान्लोकेपि वेदेपि विचार्यमेतत
९७ ऋषय ऊचुः देवदेव जगन्नाथ विश्वनाथ जगन्मय वासुदेव महादेव ब्रह्मरूप नमोस्तु ते ९८ त
त्स्वरूपा कथं काशी कथं वा रचिता त्वया भूमौ भुवननाथेन किमर्थं वा पृथक्कृता ९९ विष्णुरुवाच॰ ॥
५ कस्मिंश्चित्तु महाकल्पे लोका धर्मपरायणाः साधनानि प्रकुर्वंति मोक्षार्थं तप आदिभिः १०० तथापी
द्रियवैषम्यान्मोक्षविघ्ना भवंति हि आगस्य सर्वैर्विबुधैः कथमुच्यामहे विभो १०१ नानातीर्थैस्तपोभि राम॰
श्च व्रतैर्दानैर्जपैर्हुतैः कृतैरपि मनःशुद्धिर्दृश्यते न नृणामिह १०२ मनःशुद्धिं विना देव न मोक्षो धर्म ६
दुर्लभः कथं मुच्येमहि वयं दुस्तराद्भवसागरात् १०३ नत्वं धर्मस्त्वं सूक्ष्मरूपं विदामो मुक्ताः स्यामो येन पापा

वाग्भिस्तु जनार्दनः स्तुतः स्तुत्यनुकूलाभिर्वाग्भिः सर्वैःसुरैर्हरिः ८४ प्रसन्नोऽभून्महाविष्णुर्मुनीनां भा
वितात्मनाम् उवाच स महाविष्णुः किमर्थं संस्तुतस्त्वहम् ८५ वदंतु तन्मया प्राप्यं ऋषयः स्वार्थमुत्त
मम् ८६ ऋषय ऊचुः देवदेव जगन्नाथ दीनानाथाश्रयाश्रय सर्वज्ञस्य सदाज्ञस्य तवाग्रे मधुसूदन
८७ विज्ञाप्यमस्ति विश्वेश महीमग्नां महांभसि तस्या उद्धरणोपायं कुरुष्व जगदीश्वर ८८ ब्रह्माकारं तु
विज्योतिर्जलादूर्ध्वं प्रकाशते निमग्नां धरणीं तु न निमज्जति तत्कथम् ८९ किमेतद्ब्राप्स्थितं ब्रह्म
वेदांतप्रतिरूपितम् तापत्रयाग्निदग्धानां जीवानां ब्रह्मतां गतम् ९० दर्शनादेव भगवन् कृतार्थाः स्म जग
द्गुरो वारंवारं त्वयाप्यत्र देहिलिंग्रा जनार्दन ९१ परमात्मस्वरूपोसि भ्रान्त्यर्थे णापि पश्यसि ९२ विष्णुत्वा
च० वाराहरूपमास्थाय पृथिवीमुद्धराम्यहम् प्रतीक्षंतु कियत्कालं यावद्दैत्यसमागमः ९३ दैत्यं हत्वा
निमग्नां गामानयिष्ये जलोपरि ततः प्रवर्तितां धर्मो वर्णाश्रमनिबंधनः ९४ ब्रह्माकारं परं ज्योतिर्हैस्य

का॰म॰ स्तद्यथामतितथैवतत् ११३ अजडत्वात्सावकाशं स्वेन्नाकारतयास्थितम् आनन्दनिबिडत्वाच्च लिङ्गा
७ कृतितथामहत् ११४ जडत्वात्पृथिवीमग्ना सप्राणिनगकानना अजडत्वादिदं लिङ्गं छन्नाकारमवस्थि
तम् ११५ चैतन्यजडयोरैक्यं कथमेकस्ययोरपि भवेदितिमहाभागाजानन्तिकथयन्तिच ११६ त=
स्मात्काशीब्रह्मरूपाजडपृथ्वीरसंगता महर्जनस्तपोलोक वासिभिर्मुनिभिर्मही ११७ जलंप्रविष्टा
4
दृष्टासाछन्नाकारंमहद्युति दृष्टंतत्काशिकारूपंनिर्मितंनमयापरम् ११८ वदंतिलोकाःसततंकाशी।
केशवनिर्मिता निर्माणन्तुजडस्यान्न क्रियतेनपरात्मनः ११९ उद्धरिष्यामिचमहींवाराहंरूपमास्थि
तः तथापुनःपृथिव्यांहिकाशीस्थास्यतिमत्प्रिया १२० इत्युक्त्वाऋषिमुख्येभ्योभगवानादिसूकरः॥ रा॰म॰
उद्दधारमहादेवोमहींमग्नांमहांभसि १२१ एकीकृताकाशिकयापुनर्जीवानमोचयत् १२२ यस्यांस्था ७
वरजङ्गमाजडधियःसुज्ञाःसुधर्मान्विताः पापाढ्येवसदाशिवेनमिलिताजीवाभवंतिध्रुवम् आगङ्गा

ड्वाब्धेः तं त्वात्मानं जीवजीवं गतास्मो विद्याबीजं बीजनिर्मूलहेतुम् १०४ नानापाशैः पाशितान्नः सुरेश
नाहि नस्तां स्त्वं न चान्यत्र मुक्तिः मुक्तिं सम्यं वेदपास्त्वानुकूलामूलानूला नश्यन्ति त्वत्प्रसादात् १०५ विष्णुरु
वाच० इति श्रुत्वा वचः सेषां जनानां पुण्यकर्मणाम् सदाशिवो महादेवो लिंगरूपधरः प्रभुः १०६ मया।
स्मृतो लोकमुक्त्यै आदेशपरिमाणतः लिंगरूपधरः शंभुर्हृदयाद्बहिरागतः १०७ महतीं वृद्धिमासाद्य पं
चकोशात्मको भवत् आपातालाद्वाविकुंठं व्याप्य चोर्ध्वमवस्थितः १०८ ममेष्टदेवो दयितः परमात्मा पि
नाकधृक् कैलासादप्यगाद्देव्या भवान्या सहितः प्रभुः १०९ दृष्ट्वा लिंगं परानंदं ज्योतिरूपं सुनिर्मलम्॥
दृष्ट्वा मां मुक्तवान् रुद्रस्त्वया सम्यग्विदं कृतम् ११० ज्योतिर्लिंगं प्रकटितं सर्वप्राणिविमुक्तिदम् रुद्रस्य
वचनं श्रुत्वा मया तस्यानुरूपधृक् १११ मुद्दसत्वात्मकं ज्ञात्वा स्तुतं श्रुतिशतैः पृथक् लिंगाकारं।
क्वचिद्भाति दण्डाकारं क्वचित्पुनः ११२ छत्राकारं क्वचिद्भाति पिंडाकारं त्रिकोणकम् दृश्यते मुनिसंघे

का.म. र्भैःकिंकुर्वंतित्यास्मवंचकाः १३१ यत्प्रसादात्प्राप्नुवंतिशाश्वतंपदमव्ययम् गुरुभक्त्याशिवोदृष्टोगुरु
८ भक्त्याजनार्दनः १३२ गुरुभक्त्यामहासिद्धिःकाशिकादर्शनंगता मयापिसुप्रसन्नेनगुरुणाकाशि
कागुणाः १३३ उपदिष्टावहुमतासतांनत्वसतांमुने १३४ संतःसेव्याः सन्मुखात्काशिकायाःश्रोत
5 व्यास्तेसद्गुणाःसिद्धिरूपाः यस्यांवासःपापनिर्मूलकारीयस्यांमृत्युर्मोक्षदःप्राणिनांहि १३५ इति
श्रीब्रह्मवैवर्तेकाशीमाहात्म्येतृतीयभागेद्वितीयोऽध्यायः २ ॥ शिष्यउवाच ॥ काशिकायाःस्व
रूपंतुश्रुतंवेदादिगोपितम् त्वत्प्रसादाद्देवदेवशरणागतवत्सल १ ब्रह्मादयस्त्रयोदेवादृष्टामेत्वत्प्र
सादतः धर्मस्वरूपमखिलंज्ञातंत्वत्कृपयामहत् २ अविमुक्तस्यमाहात्म्यंशृण्वंस्तृप्यामिनोगुरो का.म.
विचित्रममृतंह्येतच्छृण्वताममृतप्रदम् ३ नहिधर्मोदयोलोकेप्रयच्छंतिश्रुताःफलम् अयमेववरो ८
मह्यंभगवन्काशिसत्कथाम् ४ कथयस्वमहासिंधोनतृप्याम्यमृतंपिबन् ५ गुरुरुवाच दृष्ट्वाका

दिसमस्ततीर्थशरणंयादेवतादैवतं साकाशीममशंकरस्यवसतिः प्राप्यानकैः सद्गुणैः १२३ गुरुरुवाच
एवंविष्णुर्महाभागप्रार्थितोमुनिभिः पुरा इमांकथांकथितवान्काश्याः संदेहशांतये १२४ गुरुभक्तो
विष्णुभक्तः शिवभक्तस्त्वमेवहि यस्मकाशीकथायांतुप्रीतिर्जाताविमुक्तिदा १२५ अन्यत्किंचिद्रहस्य
मांत्वयाहंतोषितः शिशो महत्यासेवयाप्राज्ञपापघ्न भिर्दुर्लभंशिवम् १२६ काश्यांयेपशुपक्षिकीटतर
वस्तेकामलोभादिभि र्हीनाः पापद्वेषादिशुद्धमनसाकुर्वन्तिनोकर्हिचित् मर्त्याः पापविकारकारकम
नसाकुर्वन्त्यपिस्वादतः पापंपापरतास्तथार्थरहितायांसेवतेयातनाम् १२७ मनुष्याणांसहस्रेषुपाप
भीरुः सुदुर्लभः भीरुष्वपिसहस्रेषुदुर्लभः पापवर्जकः १२८ वर्जकेष्वपिधर्मात्माधर्मात्मसुजितेन्द्रि
यः एतेष्वपिमुमुक्षुर्यः साधनैः परमैर्युतः १२९ साधनैः परमैर्युक्तः समदृक्शांतमानसः ब्रह्मात्म
भावंयद्यातितत्काश्यांहेलयाप्यते १३० सेवाफलंत्वयैवाशुप्राप्तंगुरुकृतंमहत् नहिपापातुरो

का॰म॰ द्भोगदेति १३ पश्यतातपरमार्चितांपुरींयोगिभिःसुकृतिभिर्मुनीश्वरैः यांनिरीक्ष्यपुरुषःपुराकृतैः
५ पातकैःशतमितैर्विमुच्यते १४ पूर्वजन्मशतकोटिसंचितंपापराशिमतुलंविनाशयेत् काशिकाप
रपदप्रकाशिकादर्शनश्रवणकीर्तनादिभिः १५ पश्यतातनिवसंतिसाधवोमाधवैकशरणाःशि
वाज्ञया मानयंतिसुकृतंनपातकंपातकाद्भयमुमापतेर्भवेत् १६ शरीरसंस्कारकृतोमहाजनाब
हिस्तथांतःशिवदर्शनार्थम् असंस्कृतंपश्यतिनोहरःस्वयंह्यसंस्कृतानोभगवंतमीश्वरम् १७ प
श्यसुमावल्लभमीश्वरंपतिंपतिव्रतावन्नियतांगमानसाः सकिंमहात्माव्यभिचारिणांनृणांसुदर्श
नंयातिरतिप्रियःसदा १८ लिंगानितीर्थानिसुमंगलानिदिशंदिशंप्राप्यमुदावहानि स्थितानिसद्भिः का॰म॰
परिपूजितानिकाश्यांनकःप्राप्नुयाद्धर्ममार्यः १९ काशीमहोत्सवमवाप्यमहाजनोयंसंप्रार्थयस्यखिल ५
साधनसिद्धिरूपम् विश्वेश्वरंसकललोकगुरुंसदात्तं द्रष्टुंशुभाशुभविनाशकरंशिवाख्यम् २० पश्य

ऽसांत्यभूमिंसुखसारभूमिंसंसारबन्धेस्तारकंकेशवंच ब्रह्माणंचब्रह्मघोषैरुपेतंकस्तांकाशींसंत्यजेन्मो
हदानीम् ॥ ६ ॥ येयेपरंधाम विनांभवेयुर्भवापहाकाशिकातान्क्षमेत शिवंशिवांकेशवंकाशिकांयःस्म
रन्वसेत्पापभीरुःसदान ॥ ७ ॥ बुधैर्नशुद्धिर्विहितातथागमैर्नतीर्थमंत्राहुतिदानपावनैः वाराणसींप्राप्य
जितेंद्रियाणांयथाभवेच्छंकरभक्तिभाजाम् ॥ ८ ॥ यन्नाममात्रेणसमस्तदोषान्द्रष्टास्तुतीर्थंकुरुतेहि
जंतुः तांकाशिकांकाशितकाशरम्यांकोविस्मरेत्सुकृतीशांतचित्तः ॥ ९ ॥ येस्याचैराःकाशिकायांवसं
तितेसर्वेयोगिनश्चापियोगनिष्ठाः सुखंमनोनैवसुखायपत्रसंप्राप्यतेतत्सुखंशांतचित्तैः ॥ १० ॥ काशीस्थ
लोकोनयमाद्बिभेतिनदुःखसंघान्नचगर्भवासात् बिभेतिचैकान्महतोभयात्सरंयन्मानुषंजन्मशि
वेनहीनम् ॥ ११ ॥ नकुर्वंतिनिधापंविधापुण्यमकुर्वते काशिनस्काशिकाशांसवसंतिशिवसद्मनि ॥
॥ १२ ॥ केचिन्महादेवशिवेशशंभोकेचिज्जगत्पालकविश्वमूर्ते केचिन्महापातकनाशनाद्यकेचिन्महायोग

काम. नापमानादिविवर्जनैः सदाह्यन्यैपुमानप्रियदानदायकैः वाक्यैः पवित्रैरभिमानवर्जितैः पाखंडनिंदा
१० परदारवर्जनैः २८ अन्यैरनेकैः श्रुतिसाधनैर्ये युक्ताः स्वधर्मप्रतिपालकाश्च वसंति काश्यां शिववास
भूमौ युक्ताः परत्रेह च शं लभंते २९ ये लिंगं विश्वमूर्तेर्भवभयहरणं शोक — शोषं विशोकम् सेवंते चं
ति पश्यंत्यथ विमलजलैः पुष्पधूपादिभिश्च स्नात्वैस्तुत्वा गिरीशं बहुविधिनत्वैर्भावयंतो दिनेन संपूर्णा
र्थाः कृतार्थाः परमसुकृतिनो यांति ते सुद्मीशम् ३० स्थित्वा विमुक्ते शिवदर्शनार्थं कुर्वंति कुर्वंति बहूनि
लोकाः कार्याण्यकार्याणि भवंति तेषां तस्माद्विवुप्रत्यहमर्चयेदिह ३१ स्थित्वा काश्यां विश्वनाथं त्वेह
श्राशुप्तास्ते ते मोहसंयस्तचित्ताः दृष्टो देवः साधयत्येव सर्वं तस्मात्प्रेयद्देवदेवं महेशम् ३२ पश्यतानसुकृ राम.
तैकसंश्रयं ब्रह्मकाननमिदं परात्परम् तारितैकभुवनं भुवंगतं भूधरार्चितसुरासुरार्चितम् ३३ आनन्द १०
काननमिति प्रवदंति देवा धर्मारण्यकाननमिति प्रवदंति विप्राः अर्थार्थकाननमिति प्रवदंति लोकाः

वत्सतरेणेतरितनांस्वःस्थितांगमनवर्जितांगतिमू ह्यारुह्लोहरहितांभवार्णवात्तारिताखिलजनांम्रकाशि
काम् २१ काश्यांयेमांनामगृण्हंतिलोकावीजंतेषांजायतेमोक्षमार्गे काशींयेवैसंस्मरंत्यन्यदेशेता
न्प्यात्माशंकरस्तारयेच्च २२ काश्यांयेवैशीघ्रमायुर्व्ययेनसिद्धिंप्राप्तास्तेतुतीर्णाभवाब्धेः क्लेशःकालो
लोकजास्तुक्तधर्मास्तिष्ठेद्दुष्टा नाशमायांतिसर्वे २३ वदंतिजानंतिगृणंत्यभीक्ष्णंपश्यंतिपुण्यानि
चपातकानि तथापिमुह्यन्तिकलावधर्मजैःसौख्येश्चवर्णाश्रमधर्मवर्जिताः २४ कलौपूर्वविस्यान
भवतिपरासर्वजगतां यथासत्येसम्यक्प्रतिदिनमपारंस्तुभवत्ययः अतःकाश्यांसर्वैर्जितविविधलो
ल्यैर्गुरुनतैः प्रवस्तव्यंनित्यंहरिहरकथास्वादनपरैः २५ नकाशिकायामजितेंद्रियाणांसुखायकाशी
हरवाससभूमिः तपोभिरुग्रैर्नियमैर्यमैर्जपैर्दानैर्विविक्तासनभक्तियोगैः २६ श्रीभैरवाज्ञामृतिपालनै
श्चवैराग्यसाम्राज्यसुरैर्विशोकैः शरीरशोधैर्मलमूत्ररोगैर्वाह्यागमाचारगुरूपसत्तिभिः २७ मा

का॰म॰ तीन्द्रास्तिष्ठंस्येव प्राणिमात्रानुकूलाः लोकानां ते सर्वभावैः कृतार्थाः धिक् चांचल्यं यत्र काशीवियोगः ५१ ॥
११ तदेव जन्मास्तु सुखं सुखाश्रये येनात्र वासं परिपाकमोक्षदः येनात्र वासः परलोकदुःखकृन्न सदुक्तमार्गे निर
तो भवेच्चेत् ५२ पश्य पश्य मृगपक्षिवीरुधां कीटवृक्षकृमिकामजन्मनाम् देहदैहिकविषादवर्जितः प्रीति
युक्तमनसां सुखं महत् ५३ स्थाने स्थाने संघशः शांतितापाः शब्दब्रह्म ब्रह्ममूलं वदंतः वन्यैर्योग्यैर्जीवनं क
8 ल्पयंतः सन्तः शांताः साधितार्था वसंति ५४ शैवसौरहरिदासविग्रहच्छक्तिभासितमनोभिरेततम् स्व
स्वदेवपरिसेवनार्थिभिः साधिताखिलफलैर्निषेवितम् ५५ स्वभाववैरं परिहृत्य यत्र व्याघ्रादयोपि प्रति
हृष्टमानसाः तृणं चरंतो न च संग्रहेच्छवो यत्संग्रहाहैरपरः सदा भवेत् ५६ ब्रह्मोवाच॰ ततोऽप्यग्रे दृष्ट्वासद् राम॰
यहृदयान् शंकरपरान् सुवर्णान्काशीस्थान्परमसुहृदः स्थावरचरान् क्वचिच्छाकाहारान्क्वचिदपि च ११
धात्रीफलचरान् क्वचिद्बिल्वैः पत्रैः कृतशमदमांश्छांतमदनान् ५७ सहृष्ट्वा सौभाग्यं मदनरिपुपुर्याः

कामारेः काननमिति प्रतिहृतकामाः २४ विश्रांतिं प्राप्य यत्र व्रजति परसुखं मूलविश्रांतिरूपं विश्रांताः
साधवो ये श्रमधनखचिंताग्रगतां संत्यजंति वैयग्र्यग्रस्तचिंताविषयवनमिवाज्ञाय सम्यक्प्रवृत्ताः आख्या
कादिरूपा अमृतमिव खलाः शोचकार्याणि कुर्युः २५ यथा कथंचिन्मरणं शुभात्मनां शुभं तथा पापकृतां सु
दुःखम् अतः कलावप्यधर्मैस्तथोत्तमैर्धर्मः सदा सेव्य उदारबुद्धिभिः २६ यत्र प्रविष्टा द्विपदश्चतुष्पदः स
रीसृपास्थावरजंगमाः परे सर्वेन्द्रियैः सर्वसुखानि भुंजते न भुंजते ते सुखदुःखमात्मनः २७ केचिद्देवाः केपि
मुक्तामुनींद्रा देवर्षीणां येपि भक्ता भवंति ब्रह्मानंदे काननेसंवसंते पक्षिव्याजाः सन्मृगाश्चापि चान्ये २८ ॥
विधिनिषेधपरा मनुजाः सदा विधिनिषेधकृतः सुखवर्जिताः विधिनिषेधभिया मृगपक्षिणो न खलु कर्मधि
यां सुखभूरिपम् २९ हरिरपि सुखकारी काशिकायां सुखार्थी विविधकरणहीनो हीनमुद्रस्वरूपः सुखसं
निसुपम्यालोभासितोशेषपुण्यः कथमितरजनोत्र व्याप्ततात्मा सुखी स्यात् ३० काश्यां मृता स्निग्धरूपाश्चि

का॰म॰ रवल्लिवेष्टितंमाधवैकनिलयंमहार्चनम् सर्वजीव रमणंरमाप्रियंप्रीतिरत्नसुकृतैःपराभवेत् ५५
१२ महालक्ष्मीर्ह्येषामतिदिवसमाराध्यनृहरिं प्रसन्नेदेवेशेवरधतिरतिंमोक्षगहने ऋषीणांदेवानांनरतु
रगकीटांनभविनां सुखंविश्रान्तानांमदिहवरमानन्दगहनम् ५६ ब्रह्मोवाच॰ दृष्ट्वाविमुक्तेश्वरमादिदे
वम् आनंदमानंदवनंतथान्यत् तत्रत्यजीवान्सुखसारपुष्टान् शिवान्निजानंदसमाधिजुष्टान् ५७ ॥
उवाचशिष्यःपरमादरेणसदीपकःकाशिपुर्याःप्रदेशात् प्रपश्यमानःसुचिरंमहात्मनागुरुंप्रणम्याथ
महानुभावः ५८ दीपकउवाच॰ स्वामिन्प्रसीदपरमंपरमार्थयुक्तंकाश्याःपुनर्वदवदान्यमनोभिरामम्
त्वत्तिर्नमो भवतिकाशिनिवासिजंतून् दृष्ट्वामहाफलयुतान् शिवभक्तियुक्तान् ५९ योददातिसुकृतैक राम॰
साधनंयाकरोतिसुखिनंसुसेविता याहरत्यघचयंपुराकृतंयाविमुक्तिमसुरासुरार्चिता ६० तत्रतत्स १२
गुरुर्गिरम्यतिर्मानदःपरमशिष्यवत्सलः लिंगतीर्थशिवविष्णुकाननान्यप्रदर्शयदथोमहामुनिः ६१

प्रकथयन् प्रदीपाग्रे विप्रस्थितिश्च परः शासितपरः यथादेवो देव्याः पुरस्तादिह सर्वं कथितवां स्तथाशि
ष्यस्याग्रे कथयति गुणानौरवगुरुः ४८ या निर्वृत्तिं वितनुते जितमानसानां योद्वेगदा विविधपापरता
त्मनां च या विष्णुलोकशिवलोकपरापरेयं स्नानापपापशमनी मुभसेवितास्मात् ४९ ततः प्रदेशान्तर
मासमासाद्य सरोवरैर्मण्डितमप्रमेयम् कैलासवैकुंठसुरालयाधिकं धिगस्तु नान्येन चरं नितान्त ह ५० हं
सास्वकोरण्ड्वटकावकाः मुकालूकाः समूकाद्रवसुष्कवादे नादैः सदानंदमयैः सनातनं निरूपयंतः
सुरुतैः सदाशिवम् ५१ शिवानुकम्पायदिनाश्रितास्याद्भूषणं दूषणजन्मभाजाम् सुजन्मभाजाम
पिदूषणं तन्नानाविवादैः कलहप्रियाणाम् ५२ मंदारसंतानकपारिजातकल्पद्रुमाख्यान्हरिचंदनं च
पश्यन्विचित्रान्सुबहून्सनातनान्मोक्षादिसिद्धिप्रदपुष्पयानान् ५३ यजन्ति यज्ञैः प्रतपंति तापैः कुर्वं
ति दानानि बहूनि सुव्रताः शोचंति गत्वा दिवमुत्पतंतः शोकापहं सौख्यकरं तदेतत् ५४ माधवीमधु

का०म धार्मिकैर्जनैः ६९ गुरुरुवाच० येकाश्यांनिवसंति शंकरपराविष्णोःसमाराधकास्तेषांपापचयोपियाति
१२ विलयंमुक्तिंलभंतेपिच येकाश्यांभवनाशिनींभगवतींश्रीमद्भवानींजनाः सेवंतेसततंसुपूजनपराःका
मादिभिस्तेस्थिराः ७० सर्वेषांविघ्नहर्तॄणामपिसर्वेश्वरेश्वरी अतोभवान्यधीनंहिक्षेत्रंपूज्याततःपरा ७१
येकाश्यांप्रभजंतिढुंढिगणपंसर्वाघविघ्नापहंतेषांढुंढिसमस्तशास्त्रविहितान्भोगान्प्रयच्छत्यसौ येना
20 नाविधमोदकैःसुमधुरैर्विप्रान्सुपूज्यादरात्तुत्वामोदकदास्तएवसुखिनःकाश्यामवश्यंजनाः ७२ ढुंढिरा
जःप्रियःपुत्रोभवान्याःशंकरस्यच तस्यपूजनमात्रेणत्रयोपिवरदाःसदा ७३ गणेशःसर्वदेवानामादौपूज्यः
सदैवहि सर्वैरपिमहाविघ्ननाशकोन्यत्रकिंत्विह ७४ येकालराजंकलिकालभीषणंत्वाराधयंतेवटकाज्य राम०
भक्तैः भजंतिकाश्यामपवर्गहेतोस्तएवकाश्यामपवर्गभाजः ७५ आराधितःकालराजोमहेशःपापानिस १३
र्वाणिविनाशयत्यलम् मनस्सुमुद्दंप्रकरोतियेनभजत्यजस्त्रंशिवमीशितारम् ७६ येदंडपाणिंद्विजभोज

श्रोत्रदृष्टिमनसां सुखावहां काशिकां परिकलय्य पूज्य च तस्य भक्तिरुदिता महामतेः काशिका विषयिणी वि
मुक्तिदा ॥२॥ शिष्य उवाच॰ वशीकरणविद्येयमात्मसाक्षात्मिकं जनम् करोति ब्रह्मसुखदा प्रयच्छत्यमृतं
महत् ॥३॥ दर्शितेयं भगवता गुरूणां गुरुणा मम गंगातीरगता काशी दृष्टादृष्टफलप्रदा ॥४॥ गुरोस्तत्त्वतः किं
चित्परम परमं चेतन न जडं न देवस्तीर्थं वा न च निगमशास्त्रादिपठनम् त्वया नित्यं ज्योतिः परमसुखदं वेद
पठितम् कृपामूर्ते सिद्धं प्रकटितमिदं शंभुसदनम् ॥५॥ अवश्यपूज्यं वद देववृंदं इच्छामि निर्विघ्नं निवा
सकामः सर्वापराधान्परिहृत्य भक्तं रक्षंति काश्यामधिकारिणो ये ॥६॥ गुरूपदिष्टं न करोति यस्तु शिष्यः
कथं तस्य शुभा मतिः स्यात् विदेहवत्पश्यति सर्वदं गुरुं स सर्वसिद्धिं समवाप्नुयात्कृती ॥७॥ पापान्निवार
यति धर्मपदे युनक्ति सिद्धिं प्रयच्छति ततः परमस्ति किं तत् सद्ब्रह्म दर्शयति पदं परमं विद्वण्वन् यस्तीक्ष्णतां
च गजतः कथमेत कृपालुः ॥८॥ वेदैः पुराणैः स्मृतिभिः सुखं समुपदिश्यते तत्सुखं गुरुवक्त्राद्धि भूयते॥

का॰म॰ मंगलपूर्णमूर्त्तिर्मूर्त्तः सत्वभगवांश्चिवशांतमूर्त्तिः तेपापराशिमपहृत्यपरंप्रियस्य सुद्दांतिसुद्दसुखरूपप
१४ दंभजंते ८४ वेदैः पुराणैः स्मृतिभिः सुखंसमुपदिश्यते चतुर्विधंतत्तुसुखंकाशिकासंप्रयच्छति ८५ तौ
र्थांतराणिसुखदानिभवंत्यवश्यं काशीसुखादिसकलंप्रविनाश्यतद्धि किंचित्प्रयच्छतितुयेनसतीर्थवा
सीजानातिनैवबहिरर्थनिरर्थहेतुम् ८६ शिष्यउवाच॰ कृतार्थोस्मिकृतार्थोस्मिकृतार्थोस्मिजगद्गुरो॥
21 त्वत्प्रसादान्मयाकाशीरहस्यंश्रुतमद्भुतम् ८७ नैष्ठिकब्रह्मचर्यस्यधर्मस्यपरिपालने बुद्धिर्ममदृढाभूया
त्तवानुग्रहतोगुरो ८८ गुरुरुवाच॰ कथंत्वमुपकुर्वाणः पूर्वंनाद्यतथाभवान् स्नात्वादारगृहंकृत्वाद्याश्र
मंव्रजसुव्रत ८९ शिष्यउवाच॰ गुरुसेवांकाशिसेवांचिंतासुज्ञानकुर्वते चिंताचक्रंगृहंहित्वासुखंस्यास्ये रा॰म॰
विमुक्तिदे ९० गुरुरुवाच॰ धन्योस्यवश्यंधर्मात्मागुरुभक्तोमहामतिः तिष्ठकाश्यांभजशिवंगंगांस्नाहिह १४
रिंस्मर ९१ ब्रह्मोवाच॰ इत्युक्तोगुरुणाशिष्योदीपकः कुलदीपकः गुरुसेवापूर्वकंचसस्सर्वंसमकल्पयत् ९२

नादेभजंतिकाश्यांसुखवासहेतोः तेविघ्नपूगान्मसिहत्यदूराद्दाएत्यदंशाम्बुतमाप्नुवंति ७७ दण्डपाणिभव
नंसुखावहंसंभ्रमोद्भ्रमविकारनाशकम् भक्ष्यभोज्यसुखमोक्षदंयतस्तद्विनाभवतिचाकुलाकुलः ७८ लो
लार्कादिरवीन्नवैसुमघोरे दुग्धादिभिस्तुद्विजानाराध्याश्रमवासिनोपिसततंभावेभजन्तेजनाः तेषांशोक
रुजादिदोषनिवहान्दूरीकरोत्यर्कदृक् सर्वेषामभिवांछितंचविदधत्साराधितोभास्करः ७९ काश्यांमेसु
येभक्ताःशमदमसहिताः शंकराराधकास्तेविष्णुंब्रह्माणमग्निंविविधसुरगणांस्तेर्चयन्तीतिनूनम् आत्मा
यंस्थावराणांश्रुतिशतपठितोजंगमानांतथात्माशीघ्रंकाश्यामवश्यंफलतिहृषफलंधर्मकामादिमुद्दम् ८०
येयेदेवाःप्रार्थिताःप्राणिनांहिसिद्धिंदद्युःप्रार्थितामन्यतीर्थे तेषांभक्ताःप्राप्नुवंत्येवसिद्धिमेकांकाश्यांयन्नदे
वाश्चदेवाः ८१ किंवर्णितेनबहुधाकाश्यांयेवासिनःकृशाः तेपिस्थूलतराःप्रोक्तायतोव्यापकमूर्तयः ८२
काशीस्थजंतुजातस्यसेवकःशिवसेवकः काशीवासिविरोधेनविरोधोहिभवेभवे ८३ काशीकथाश्रवण

का॰म॰ मैश्वरंप्रीणयन्नाप्ततत्वः वसत्यवश्यंशिवनामतत्परः पापार्त्तिदुःखाधिविवर्जितः कृती ७१ एवंस्वधर्मनि
१८ रतोह्यग्निशर्मा शिवार्चकः आपवाराणसींशुद्धः शुद्धिंसंसाधुसंमतः ७२ प्राणोत्क्रमणकालेतुभवान्यातु
भवः स्वयं व्याचष्टेतारकंब्रह्मास्यितिंतस्यसुवर्णयन् ७३ श्रीईश्वरउवाच॰ अहोनिश्चयवान्विप्रः का
श्यांसद्भिः समाहृतः प्रापमांपरमात्मानंशास्त्रदृग्लौल्यवर्जितः ७४ एवमेवमहाभागाममक्षेत्रनिवासि
नः अग्निशर्मायथाप्रापुः प्राप्स्यंतिपरमंपदम् ७५ रागद्वेषविवर्जिताहृढधियोधर्मेषुपापेष्वपि ग्राह्या
22 ग्राह्यविचारतः सुमनसः सिद्धिंपरांयांतिते येतुप्राप्यमनुष्यदेहममृतंनिष्कास्यहालाहलंसंपूर्यात्रपरत्र
यांतिविषमांतांभैरवींयातनाम् ७६ अतएववसेत्काश्यांयावज्जीवंजितेन्द्रियः यथाग्निशर्मणाप्राप्तंमं राम॰
सुब्रह्मसनातनम् ७७ वेदधर्मोवाच॰ इत्युक्त्वाभगवांश्चंभुरानंदगहनेचरन् देव्यैसंदर्शयामाससौ १८
भाग्यंकाशीवासिनाम् ७८ दीपकउवाच॰ भगवन्श्रोतुमिच्छामिसोमशर्मकथांपुनः यथातत्त्वात

यीत्यरमात्माजनार्दनः ६१ सोमशर्मोवाच० मयारेवातटेभ्रातस्तपश्चर्यंतपउत्तमं मोक्षादिसिद्धयोगेनप्राप्य
तेविजितेंद्रियैः ६२ रागद्वेषविहीनानांचिंताचांचल्यवर्जिनां सर्वत्रकाशीविज्ञेयाब्रह्मज्ञानरतात्मनाम्
६३ अग्निशर्मोवाच० मार्कंडेयमुखाच्छ्रुत्वारहस्यंकाशिसंश्रयं तथापिस्तवलेनत्वंमोक्षंसाधितुमु
द्यतः ६४ गंतव्याकाशिकानौकामज्जतांपारदायिनी मयाधर्मसमर्थेनवीतरागेणधार्मिक ६५ नका
शीसदृशीमातागर्भवासप्रदायिनी गर्भवासादिदुःखानिपापानिचमहांत्यपि ६६ क्षालयस्येवनिर्दिष्टा
दुष्टानामपिसेविता कलिकालस्त्वयंतीक्ष्णःकृतपःक्षपरात्महृकृ ६७ काश्येवशरणंसुहृत्सुहृदाभ
लिनात्मनाम् इत्युक्त्वाभ्रातरंविहायाग्निशर्मामहामतिः ६८ जगामकाशींधर्मादिसाधनैःपूर्णविग्र
हां काश्यामागत्यधर्मेशंनत्वाधर्मपरोवशी ६९ सधर्मविद्धर्मपरोमहात्मासुमानदोमानविवर्जितस्त्व
यं शृण्वन्कथाःश्रावयन्काशिकायाःकुर्वन्वृषान्काशिकायाःसमाप ७० वचोमनःकायगुणैःपरेशंध

राम. दर्शिना ८८ जपःफलंमयाप्राप्तंयस्यसर्वंवशंजगत् भोगान्भुक्त्वाततश्चांतेयास्यामिपरमांगतिम् ९० अ
१९ यकालउपावृत्तेकालधर्ममुपेयिवान् स्मरन्नानाविधान्भोगान्यंचत्वंप्रापतापसः ९१ जातोम्लेच्छमही
पालःसिंधुतीरेतिलोलुपः पुनर्यथेष्टाचरणान्नरकेविनिपातितः ९२ अतएवतयोभ्रात्रोर्विरुद्धामतिरु
दितः श्रुत्वात्वयाकाशिवासिन्विचार्यबलाबलम् ९३ यःस्वात्मनिसमारोप्यवर्ततेकामकारतः कर्तृत्वं
13 समहापापोवर्त्ततेसोमशर्मवत् ९४ सोमशर्मामहाभागस्तपस्वीकुलशीलयुक् तपसासिद्धिमासाद्यसि
द्धाभोगान्समाप्यच ९५ भोगेविषयतादात्म्यं तादात्म्यान्नरकंपुनः अतःकलौतपोविद्यायज्ञदानादिकाः
क्रियाः ९६ सांगाभवंतिनकृताःकुशलैरपिदेहिभिः तस्मात्काश्यैवहिकलौसुकृतापूर्तिकारिणी ९७॥ राम.
आत्मासंभावितोयस्मात्तस्मात्सनरकंगतः नरकेपच्यमानस्यभ्रातुःस्मरणमागतम् ९८ मद्भ्राताकाशिका १९
यांपस्तिष्ठस्येवविरक्तिभाक् सधन्योयेनतपसापरलोकःसुसाधितः ९९ इतिस्मरन्नेवससोमशर्माशांतः

पःप्राप्यगतिंतांकथयप्रभो ७९ गुरुरुवाच० सोमशर्माविप्रवर्यश्चचारविपुलंतपः अद्रिकूटेषुती
र्थेषुतथाक्षेत्रेषुचाश्रवान् ८० शाकाहारःफलाहारोवायुभक्षोजलाशनः जितेंद्रियमनोबुद्धिर्विजिता
त्मासचात्मवान् ८१ बहुप्रकारांमहतींसिद्धिंप्रापयदृच्छया दूरदर्शनदूरस्थश्रवणंदूरगामिता ८२॥
अन्याश्चसिद्धयःप्रापतस्यरःसमजायत मानयंतियतोलोकामुनयोदेवतागणाः ८३ सोमशर्माण
मत्युग्रसाधनंगर्वगर्वितम् कंचिच्छपतिविप्रश्चसत्समनुगृण्हातिकंचन ८४ कंचिद्दरिद्रंकुरुतेधनिनं
कंचिदेववतु पुत्रपौत्रादिसंपन्नंकरोतिकमपिस्फुटम् ८५ निगृण्हात्यनुगृण्हातिलोकान्लोकेश्वसेवि
तः गर्वपर्वतमारूढोनपश्यतिपुरःस्थितः ८६ नानाविषयसंहारःसंपन्नस्त्रीभिरन्वितः दिवानिशंवि
स्मृतात्मागतिस्तापससत्तमः ८७ भक्ष्यभोज्यपरोनित्यंभोगसौभाग्यगर्वितः जातोनमानयत्येवपितॄ
न्देवान्गुरूनपि॥ ८८ कदाचिद्भ्रातरंकाश्यांस्थितंदीनधियास्मरन् नाशितंजन्ममद्भ्रात्रादीनेनानित्य

काश॰ नजानाम्यहमप्यासुसूक्ष्मंपुण्यंविचारयन् आनीयतांसोमशर्मा ममाग्रे सत्वरंभटाः ११० इत्युक्त्वायमदूता
२० स्तेयमेनयातनागृहात् आनिन्युर्ब्राह्मणंशीघ्रंकाशीकाशीतिजापकम् १११ अभिमाननिधेविप्रकिंस्मरे।
स्यत्रमद्गृहे वदतेयातनावश्यंसमाश्रित्यकथमागताः ११२ सोमशर्मोवाच॰ ताड्यमानोहमनिशंयातनासुवि
चित्रधा स्मृतवान्भ्रातरंत्वीयम ग्निशर्माणमस्मिभो ११३ तेनोक्तंपूर्वमेवास्तुकाशीमागच्छयाम्यहम् ॥
14 मयापापात्मनाकाशीनिंदिताहंकृतात्मना ११४ स्वसामर्थ्यंप्रकटितंतथावस्तुस्वरूपया अभिमानकृतैर्ध
र्मैस्तपोभिस्तीर्थसुव्रतैः ११५ म्लेच्छत्वंप्रापयित्वादौनरकेविनिपातितः नपापंब्रह्महत्यासमान्नपापंगोवधः
स्मृतः ११६ देहाभिमानपापस्यकलांनार्हन्तिषोडशीं नाश्वमेधःपरंपुण्यंतुलादानादिसंभवम् ११७ गोस राम॰
हस्त्रादिजनितंयथाहंकारवर्जनात् अहंतपस्वीपुण्यात्माजितेन्द्रियगण स्त्वहम् ११८ अहंधीरोव्रतीशांत २०
साधयिष्येपरंपदं मनस्यभिमतिंकृत्वास्यक्त्वाभ्रातरमात्मनः ११९ स्थितोऽसत्संगतिरतःप्राप्तास्योमाहियात

सुखंप्राप्तमनोनुकूलम् विचारयामासकिमेतदद्भुतंकस्यप्रभावात्सुखमुत्थितंत्विह १०० अहोमया
त्मापरितापितोहृथातपोभिरुग्रैर्नियमैर्यमैश्च नभ्रातुरज्ञासुकृताद्दुरात्मनामहाभिमानात्पतितातेमोंधम्
१०१ महासिद्धिप्रदांकाशींनसेवंतेदुरात्मनः महातपोभिरुग्रैश्च साधयामोवदंतिये १०२ साभिमानाःप
तंत्यंधंयथाहंतेपिमानवाः नतपोनजपःशौचंतीर्थदानव्रतादयः ३ नाशयंतिमहाज्वालामभिमानानलै
र्युताः अहोलोकाःकाशिकायामाहात्म्यंनविदुःपरम् १०४ अज्ञातेनापियेनाहमोचितोस्म्यभिमानतः ॥
ज्ञात्वाकाश्यांश्रद्धयायेवसंतितेषांपुण्यंवेत्तिनोकश्चिदत्र नानातापैस्तप्यमानैःसुभीमैर्यन्नाम्नाहंमोचितो
गर्वराशिः १०६ काशीकाशीतिकाशीतिबहुधासंस्मरन्द्विजः नपश्यतिहिनरकान्वर्तमानान्स्वयंकृतान्
१०७ गुरुरुवाच० यमदूतैस्तदाश्चर्यंदृष्टाविस्मापितोयमः भ्राम्यमाणोप्ययंविप्रोनयास्तिंपरिपश्यति १०८
आक्रंदरहितोजातःप्रसन्नवदनःसुखी केनपुण्यविशेषेणमध्यमाश्चर्यकारिणा १०९ धर्मराजउवाच०

का॰म॰ स्यंभोवंद्यात्तथा ४ कालेनवलिनाविप्रनश्यत्याशुर्बलंस्मृतिः ५ वित्तंगुणाचारकुलादिहेतुन्योयव्यव
२१ स्थासुबलंप्रयुंजते दाम्पत्यमेवानरुचिंकरोतिपूज्याश्चपाखंडिनएवसर्वे ६ यज्ञोपवीतंहिद्विजहेतुरेव
लिंगंहिवर्णाश्रमकारणंस्यात् अनाढ्यएवात्रकलावसाधुराढ्यस्तुसाधुःकृतदंभएव ७ अभ्यंगमे
वात्रपरस्परंसदाह्यलंकृतिःश्मश्रुकर्मातिसौख्यं तीर्थप्रदेशेवसतांनृणांनहिश्रद्धास्वतीर्थेषुकदाचि
25 दत्र ८ देशांतरंकामदंवर्णयंतिगत्वाचतत्राप्यपराधयुक्ताः कलौकलुषचित्तानांपुरुषार्थःपरोहिसः
९ यथाकथंचित्पुरुषःकुटुम्बभरणोद्यतः सत्यवादीजनैर्धृष्टःप्रोच्यतेपापवानपि १० कलौधर्मःसु
विरलोयशोर्थेयत्रतिष्ठति राजानोनिर्घृणालुब्धाःपरदारधनारताः ११ नब्राह्मणावेदवेदार्थनिष्ठाः
प्रतिग्रहार्थंश्रुतिधर्मयुक्ताः विक्रीयकन्याश्चसुतान्परस्परंकुलाद्युपेक्षैवविवाहकारिणः १२ वदंति राम॰
धर्मंनतुधर्मनिष्ठाःनिंदंतिपापंखलुपापकारिणः देवान्गुरून्पितृन्यज्ञादिसर्वान्प्रपंचयंतेधनलोलुपा २१

नाः १२० धर्मराजउवाच॰ गत्वाकाशींमुक्तिदात्रींभजस्वांवापुतंशिवं स्नाहिभागीरथींरम्यांसंप्राप्नुहिपः
रंपदम् १२१ गुरुरुवाच॰ धर्मराजाज्ञयाजातोविप्रःकोलापुरेशुभे तारुण्यंप्राप्यसर्वात्मागतोवाराणसीं
पुरीम् १२२ सुशर्मणःसुतःसोथसर्वात्माशिवभक्तिमान् धर्मेश्वरप्रसादेनप्राप्तःकाशींविमुक्तिदाम्
१२३ अहंकारादिदोषाणांनाशकर्त्रीनृणामिह धर्मेत्तःकोनसेवेतकृतज्ञःसाधुसत्कृतः १२४ सोमश
र्मकथांदिव्यांसुखमोक्षफलप्रदाम् श्रुत्वाविमुच्यतेजंतुरहंकारादिबंधनात् १२५ ॥ इतिश्रीब्रह्मवैव
र्तेकाशीमाहात्म्येचतुर्थोऽध्यायः ४ ॥ गुरुरुवाच ॥ संध्यासंध्यांतयोस्तातकलौधर्मोहिदृश्यते मध्ये
क्रमात्क्षयंयातिदीनैर्विषयिभिर्हतः १ दीपकउवाच॰ संध्यायांपूर्वसंस्काराद्दृश्यतेहिवृषःक्वचित्
संध्यांतेतुकलौकुत्रधर्मःस्यात्सतिसद्गुरो २ गुरुरुवाच॰ जनार्दनःकल्किरूपोभविष्यतिदीपक ॥
तेनप्रवर्तितोधर्मःसंध्यांतेसंभविष्यति ३ कलेस्तुप्रथमेपादेधर्मोभवतिकश्चन ततश्चानुदिनंधर्मःस

का॰म॰ २१ तदामायानृतंदंभोनिद्राहिंसाविषादनं शोकोमोहोभयंदैन्यंलोकानांप्रचुरंभवेत् २२ क्षुद्राः क्षुद्र
२२ सुखप्रदाः कलियुगेमर्त्यामहाभोजनाः क्षुद्रप्राणधनादिपोषणपराः कामाधिकाःक्रोधिनः लोभावि
ष्टमनोजुषःपरदयाहीनाःसदावंचकारागद्वेषपराःपरापरविचाराढ्येःसदाचोज्झिताः २३ वित्तैर्हीनाः
स्वैरवृत्तिप्रसंगाःस्वैरिण्यश्चस्त्रीषुयाश्चेष्टवर्णाः दस्यूत्कृष्टालोकसंघाःसपापवेदाःक्षीणाब्राह्मणाः
76 सेवकास्ते २४ कलौनविप्राःसमयस्थिताःक्वचिन्नृपाःप्रजाभक्षणवित्तलोलुपाः व्रतादिहीनावटवो
विशुद्धागृहस्थरूपाःखलुतस्करामताः २५ वनेनवासोवनवासिनांहिधनार्थिनःप्रव्रजिताःकलौयु
गे ह्रस्वाःस्त्रियोविपुलंभक्षयंतिबालाःक्षुधार्त्तावटवःकदर्याः २६ वचांसितिक्तानिवदंतिचांगनाचौ का॰म॰
र्यादिवीभत्सनिषिद्धकर्म्मः २७ पाखंडप्रभवाविप्राःक्षत्रियावणिजोमताः वणिजःकूटकर्त्तारःसम्पदः २२
पापहेतवः २८ पतिंत्यक्ष्यंति निर्द्रव्यंभृत्याश्चाप्यखिलोत्तमम् भृत्यंविपन्नंपतयःकौलेगांचापयस्विनीं

द्विजाः १३ क्षत्रियाः परमदुर्लभाः कलौ धर्मशास्त्रगुरुदेवपूजकाः १४ आहारमैथुनरताः परमादरे
णग्रहणसंग्रहपराः परवादभूराः नप्राणिरक्षणपराः परमादरेण कुर्वंति धर्महननं द्रविणार्थमेव १५
परभूत्यवंचनपरा वणिजो नराद्या धर्मादिकार्यकरणे परमात्मनिष्ठाः आहारमैथुनधनानि सदादरेण र
क्षंति शास्त्रविमुखाः पतनमद्यभक्ष्याः १६ वैश्याः कलौ न हि भवंति कुलादियुक्ता ये वा भवंति न हि तेषु
रूपः कदाचित् शूद्रादिहस्तयदुमे द्विजदेवनिंद्या विप्रद्विषः परमदारुणबुद्धयश्च १७ शूद्रास्त्वनंत्यल
मेवदत्ता विप्रेभ्य एव हि कारयिष्यंति महतीं सेवां सेवाविवर्जिताः १८ अन्नादिभिर्व्यवहरंति तु ये मनुष्या
वैश्या भवंति खलु ये व्यवहारदुष्टाः शिष्टास्त एव धनिनस्तु यतः सुपूज्या लोके धनं सुखकरं ननु तिष्यकाले
१९ शूद्रा विशुद्धा न हि तिष्यकाले द्विजादिवेषाः श्रुतिनत्यराश्च शास्त्रार्थवादे जनवंचकाश्च कलौ भवि
ष्यंति निरंकुशास्ते २० कलौ दुष्टा दुराचारा निर्दयाः शुष्कवैरिणः दुर्भगा भूरितर्षाश्च सर्वे वर्णास्तथाश्रमाः

ह्निणःकाश्यसंमताः ४९ शिष्यउवाच० गुरोश्श्रुत्वाकलेर्धर्मान्सत्यमेवदिनेदिने सर्वग्रासेसमुत्पन्नेनशास्त्रं
नगुरुःशिवः ५० स्मरणीयानिलोकस्यगन स्तस्यमूढचेतसः त्वंनश्श्रुःपरंपुण्यंयेनपश्यामहेवयम्
५१ प्रकाश्यपरंज्ञानमज्ञानध्वांतनाशनं ५२ गुरुरुवाच० कलौनवर्णाश्रमधर्मतत्पराःसच्छास्त्रस
त्संगविवर्जितास्तथा श्रुतोमहापापमयेहलाहलेकलौशरण्याकिलकाशिकैव ५३ यथापराभूपजनाः
शरण्यंगच्छंतिशीघ्रंपरमार्तियुक्ताः तथातिशीघ्रंशरणप्रदंन्रणांकाशीप्रगच्छेच्छिवराजधानीम् ५४
मनुष्यदेहेसुरदेवपूजितेसुकर्मभूमौविविधार्तिनाशने स्थितोहिजीवःसमुपेक्षणीयोभवेन्नबाल्यादि
षुवैकदाचित् ५५ सम्पक्कृतंलालनपालनादियदस्यदेहस्यनरैःकृतघ्नैः तदोपकारःस्थिरतामुपैतिदे राम०
हेत्वजीर्णेनहिकाशिकास्यात् ५६ कलौनविप्राःनहिबाहुजाःक्वचिद्व्रजंतिकाशींनशिवोहरिंवृषं वै। २३
श्यादयोयेधनधान्यगेहदेहप्रियाःपापरतानभक्ताः ५७ शृण्वंतुलोकाःपरमार्तियुक्तारहस्यमंत्रंपरमा

२९ पितृपक्षंपरित्यज्यभार्यापक्षंभजंतिहि गुरुवाक्यंनकुर्वंतिस्त्रीणांदास्यपरानराः ३० सूद्राःप्र
तिग्रहपराःनिर्णयज्ञास्तपस्विनः नानावेषैर्वंचयंतोलोकान्वाक्याटवैःशनैः ३१ प्रायश्चित्तंकरिष्यं
तिपापंकृत्वापिनोजनाः धर्मवक्ष्यंत्स्यधर्मज्ञाअधिरुह्योत्तमासनम् ३२ स्वमानार्थंयत्नपराःमह।
त्सुद्विजसाधुषु प्रजाःकलौपापशीलाअतोदुःखसमन्विताः ३३ नित्यमुद्विग्नमनसोदुर्भिक्षकरक
र्शिताः निरन्नेभूतलेमंस्युव्याधिदस्युभयार्दिताः ३४ वासोन्नपानशयनव्यवायस्नानभूषणैः हो।
नापिशाचसंदर्शाभविष्यंतिकलौयुगे ३५ काकिण्यर्थेजीवनंसंत्यजंतिस्नेहंहित्वाबंधुभिस्ताड्यमा
नाः रागद्वेषाक्रांतदेहाःपतंतिकूपेभक्ष्यंभक्षयंतोम्रियन्ते ३६ पितरंमातरंचैवनसेवंतेकदाचन पु
त्रादारपराधीनामैथुनादिप्रियाःसदा ३७ कलौकृतघ्नाःपाखण्डाउपकारविहिंसकाः उपकारेपिकृ
पणाःप्रतीकारविवर्जिताः ३८ उपकारेमहतिचस्वल्पोपकृतिवर्जिताः निर्लज्जाविष्णुशिवयोर्द्वे।

का॰म॰ वामदेवउवाच॰ महासेनमहाराजकलिदोषोयमद्भुतः येनत्वंकुलवीर्यादिसंपन्नःपापमीहसे ५९ नच
२७ धैर्यंनचकुलंनचधर्मोयशोभगम् कलिःप्रवर्तयेत्कापिविपरीतकरःसदा ६० प्रविष्टोभारतेखंडेनस्थातव्यं
तदान्विभिः स्थातव्यमेवचेत्काश्यांयत्ननोधर्मवर्तिभिः ६१ अन्यायवर्तिनांकाशीकलेरपिसुदुःसहा त्वं
काश्यांपानकरुचिलोकविध्वंसकःशठः ६२ कथंनतेपराभूतिर्देवब्राह्मणनिंदक अद्यापित्यजदौरा
18 त्म्यंभजसौप्रीत्यमादरात ६३ जयोयशःसुखंधर्मोजायतेत्वनेकलानपि ६४ महासेनउवाच॰ ॥कलिप्र
वेशःकाश्यांनश्रूयतेशास्त्रतःसदा काशीराजस्यचममकलिदोषात्पराभव ६५ कथंजातःकाशिका
यांस्थितस्यापिविशेषतः यत्रविघ्नानसंत्येवतत्राविघ्नाःसमागताः ६६ वामदेवउवाच॰ पापात्मन्दुःखस का॰म॰
मयेकलेर्वेशोनविद्यते कलिग्र स्तमनोधृष्टदेवब्राह्मणनिंदक ६७ कलेःस्वरूपंशृणुमेयथाकाला। २७
त्मकस्यच नकलिर्दण्डमादायहन्तिकंचनमानवम् ६८ अधर्मेऽभयत्येवमानसंमानुषस्यहि यश्यका

दरेण कलौ विनष्टव्रतधैर्यवीर्यो गन्तुं तु काशीं परमार्त्तिनाशिनीम् ४८ अत्रैवोदाहरंतीममितिहासं पुरा
तनं महासेनस्य राज्ञश्च वामदेवस्य चित्रुरोः ४९ संवादः सुमहानासीत्काश्यामेव कलौ युगे आसीच्चंद्रान्व
योराजा महासेनद्युतिस्सुतः ५० काश्यां दुश्चरितः पापः पापिसंसर्गदूषितः परदारपरद्रव्यपरः परमको
पनः ५१ कदाचित्कस्यचित्पुंसोऽनसंतुष्टः कुसंगतः कामी कलहकृत्क्रूरः कलहप्रियवल्लभः ५२ प्रजा
दंडपरस्तैणश्चाद्दुचौरजनप्रियः अक्षौहिणीपतिः सोऽयं गतोजेतुं नृपांतरम् ५३ तेन संग्रामभवद्युद्धं जित
श्चासुसुमेधसा प्रतिष्ठानपतिः सोऽथ सुमेधाः शिवभक्तियुक् ५४ अविमुक्तप्रियश्चैव ह्यविमुक्तजनप्रियः
सुमेधाः स्वल्पबलवान्महासेनो महाबलः ५५ तथापि ताडितस्तेन धार्मिकेण सुमेधसा सहसेनं पलाय्या
पि बलं हस्त्यं नसंजहौ ५६ काश्यां प्रभीतो दुःखार्तो लज्जितः पुनरागतः वामदेवं मुनिवरं पप्रच्छ भयकारणम्
५७ महासेन उवाच ॰ वामदेव स्थूलबलः कथमल्पैरहं जितः परैश्च स्वबलैः क्षुद्रैः शूरोऽहं सर्वदिग्जयी ५८ ॥

का०म० चारणात्तत्तत्रपरिपृच्छ्याथमाम् यानियानिवचनान्यहंब्रुवे तानितानिनिगमेषुदृश्यताम् ८० इत्युक्त्वा
२५ समहातेजाःसेनांकृत्वाविनिर्गतः सुमेधसंविजेतुंप्राक्सम्भृत्स्यवलवाहनः ८१ अभिमानमहाज्वालादग्ध
देहद्रुमोधमः नदेवगुरुवाक्यार्थेधृष्टोधैर्यविनाशनः ८२ प्रतस्थेधार्मिकैर्युक्तोधार्मिकैश्चविगर्हितः अ
याश्रुत्सुमेधाःप्राक्रियोरुद्योगमायतम ८३ स्वसैन्येनवृतःप्रायान्महासेनवधोद्यतः ब्राह्मणान्पूज्यवि
19 धिवत्काशीनाथंसमर्च्यच ८४ क्षेत्ररक्षाकरान्सर्वान्संपूज्यश्रद्धयान्वितः प्रस्थितःशिवनामांकसन्नाहा
दिभिर्भयोज्झितः ८५ शिवनामांकितमुखाःसैन्यलोकाःसुमेधसः सैन्योपकारगांतस्ययत्किंचित्सुमहा
त्मनः ८६ शिवनामांकितंभातिनकलिस्तत्रविद्यते कलिःप्रतिष्ठानपतिंबहुकालंसमीहते ८७ अवे रा०म०
क्ष्युनसमर्थस्त्वंशिवरूपंमहीसुरः विभूतिभूषिततनुःशिवसन्नामनामकः ८८ शिवाक्षमालितःसौम्यः २५
शिवकीर्तनतत्परः नविस्मरतिमेधावीशिवंशिववधूंपराम् ८९ आरभ्यबहुलंकालंकलिनाधीरभी

ऽपिमहाभागाः सत्यधर्मपरायणाः ६९ दानैर्व्रतैश्च नियमैः स्वाध्यायैश्चैवसंयुताः तेषांकलिर्नप्रभवेद्धि यमा
न्यपिसर्वशः ७० पापंकृतंतुमभवेत्कलिर्मांस्तुकदाचन ७१ पुण्यंकृतंचास्यमभवद्यत्तस्मात्पापंनविनाश
येत् येषांकृत्स्नामतिपालकाः मद्भानतेषुपापंनभयंपराभवः ७२ शिवापराधेनकलिः समः किंभवस्यवश्यं
स्वल्पपापस्य शिवापराधाद्धि णात्येऽपिनश्यंतितिर्थ्यानमुभूत्यभूस्सः ७३ सर्वप्रकारैर्नहिकाशिकायां
मामप्रयुक्तंनसुखायभूयात् ७४ कलिर्भवत्तुभावान्नपापंदुःखायकेवलम् पापाद्भीतः प्रवर्त्तस्त्वयुष्मा
त्सिद्धेस्तुखम् ७५ महादेव उवाच० कदाचिद्ब्राह्मणाम्नुः काश्यांपापंनविद्यते उत्पत्तिपातकानांच का
र्यालितमवदंतिहि ७६ अनन्वितंवदंस्येतद्बुध्यतेनमयास्फुटम् ७७ पुनर्गमिष्येहिसुमेधसंनत्वंजेतुंहि
आनांवचनैर्नेहकृत्यं नमेस्वातंत्र्यपरोगुरुः कचित्राजागुरुर्भातियशस्विनांपरः ७८ सूतउवाच० स्वय
मेवमहासेनः पार्श्वस्थानाहसर्वहृत् धर्मप्रकल्पितंतातनिरंकुशशिरोमणिः ७९ यत्रयत्रभवतांवि

का॰म॰ तद्दातवोक्तंसस्यंस्यात्सर्वंधर्मेपराप्रिय: १०१ कलिरुवाच॰ एषगच्छाम्यहंतावत्प्रतीक्षस्वक्षणेनतत्॥
२६ करिष्यामियथाराज्ञोबुद्धिर्मेमपराभवेत् १०२ मयिप्रवृत्तेलोकेशेक्वधर्म:क्वहरि:शिवौ धर्मादीनांकथा
कातुवर्णाश्रमनिबंधनात् १०३ अहंस्वतंत्र:सुखद:पापिनांतुसुखावह: इत्युक्त्वाद्वापरंसोथप्रतिष्ठा
नपत्तिंगत: १०४ छिद्रान्वेषणकृन्नित्यंनानारूपधर:कलि: नप्रापशिवभक्तस्यधार्मिकस्यनिरंतरम्
20 १०५ छिद्रंकलिर्महासेनमाश्रितोपिकदाचन संवत्सरत्रयंसाग्रंस्थित्वाराज्ञोगृहेकलि: १०६ जगाम
सहराज्ञोग्रेवंधनायकृतोद्यम: नांतरंसमनाग्लेभेशांकरस्यसुमेधस: १०७ काशींसक्त्वाकाशीराज:
प्राप्त:शीघ्रंसुमेधसं ब्रह्मब्राह्मणधर्माणांदोषान्गृण्हन्गुणांस्त्यजन् १०८ युद्धायसज्ज:पापात्मामया राम॰
जितमितीरयन् अहंकाशीपतीराजासर्वासुरनमस्कृत: १०९ अहंसुमेधसंतुच्छंजित्वान्यांश्चजयेव २६
रान् अभिमानमहाद्वंद्वसन्नद्धोवाक्यशौर्यसंयुत: ११० युद्धंचकारकिंचित्सप्रतिष्ठाननृपेणह ध्रियतां

रुणा प्रवेष्टुंतुसमारब्धःशिवेनपरिरक्षितः ९० शिष्य उवाच० किमर्थंकलिनाराजा क्लिश्यतेसाधुसंम
तः किंवाकलेरपक्षत्तंराज्ञाशिवपरेणतु ९१ गुरुरुवाच० कलिनाद्वापरेणापिविवादःसमजायत॥
विष्णुप्रजाप्रतिस्थेद्वापरंकलिरब्रवीत ९२ अहंचतुर्युगेष्वत्रसमर्थःस्वकृतात्स्वकात् नियंतुंनचश
क्योहमाज्ञापयितुमप्युत ९३ मयिजीवतिलोकेशे वर्णाश्रमनिबंधनाः वोभीतिमागस्यपलायंते
दिशोदश ९४ मच्छंदानुगतोलोकःसुखमास्तेविचारकः निरंकुशोतिगहनःसर्वेवस्तुषुसंश्रितः ९५
वर्णाश्रमेषुलोलेषुपुरुषार्थनिरोधकः ९६ द्वापर उवाच० अहोवतमहद्धार्ष्ट्यंतवदुष्टस्यदुर्मते न
लज्जसेवदन्नित्यंस्वयमेतज्जुगुप्सितम् ९७ एवंयःकथयेत्यापोवर्णाश्रमरिपुर्ह्यहम् नशोभतेस
त्सभासुधिक्कृतःप्राकृतैरपि ९८ अजितेंद्रियमूरस्त्वमधार्मिकमहाग्रहः धीरान्धर्मपरान्स्रष्टुमयिन
त्वंक्षमोह्यसि ९९ प्रतिष्ठानपतीराजासुमेधाःशंकरप्रियः तंचेत्वंविस्मृत्यत्वद्धर्मेप्रवर्तयसि धार्मिकं १००

श्रा॰म॰ यास्तु सुमेधसं ऊचुः कथं न गृह्योत काशीराज्यं जितं त्वया १५२ सुमेधा उवाच० तद्देवराज्यं मम मनैवमंत्रिणः
२८ कुतः पुनः शंकरगेहमेतत् राजाधिराजः स हि शूलपाणिर्वयं तदाज्ञापरिपालकाये १५३ ब्रह्मांडकोटिप्र
भवोपि येस्सुरेश शंकराज्ञां न विचालयंति वयं पुनः के कृतहीनजीवाः श्रीशंकराज्ञां प्रविचालयामः १५४ ॥
न युक्तं स्वाम्यमन्यत्र किं पुनः काशिमंडले अत्र स्वामी जगन्नाथो विश्वनाथः सुमुक्तिदः १५५ देहस्यापि न मे
21 स्वाम्यं किं पुनर्धनराज्ययोः १५६ गुरुरुवाच० इत्युक्त्वा मंत्रिमुख्येभ्यः सुमेधाः स्वगृहं ययौ महासेनो
द्विनैः प्राप्य काशीं हृष्ट्वा विमूर्च्छितः १५७ पुनरुत्थाय विलुठन् हा काशी त्राहि मामघं तवापराधिनं दुष्टं देव
ब्राह्मणदूषणम् १५८ गुर्वाज्ञाभंगकं पापं महाविषयलोलुपं पुत्रामरराज्यं विनिवेद्य कृत्तिवासेश सन्नि रा॰म॰
धौ १५९ स्थितो वैराग्यबहुलः सिद्धिं प्राप्य सुदुर्लभां कलिद्वापरयोर्वादः स्पष्टोभूत्तु व्यवहारतः १५० ॥ २८
धीरे जितेंद्रिये यस्तु तं कलिर्न प्रबाधते अजितेन्द्रियलोकस्य कलिः स्वामी भवेदिह १५१ कलौ विवेकि

प्यहंराजास्यास्यामितवसन्निधौ प्रत्यहंयाचमानस्तुनिःपापःपुण्यसंयुतः १३२ नविस्मरतिकाशींसराजा
विरहकातरः मायवाराणसीदेशंविह्वलःसंस्मरनशिवौ १३३ शिष्यउवाच॰ यदासुमेधसाराजापराभूतो
विनिर्गतः तदासुमेधसः कृत्यमुच्यतांसाधुसंमतम् १३४ महात्मनांवदान्यानांसत्संगश्रवणैषिणाम्
मनस्त्यजतिदौरात्म्यंबहुजन्मार्जितंक्षणात् १३५ तैरेवसाधनैःपापाद्द्रोहिणःशास्त्रवेदयोः यांस्मसद्ग
तिमापन्नागुरुद्रोहरताःखलाः १३६ गुरुरुवाच॰ सुमेधास्तांपराभूयतस्यपुत्रंमहामतिं स्थापयामास
तद्राज्येशिवभक्त्यासमन्वितः १३७ उवाचचमहात्मानंमहात्मासमहामतिं पाहिलोकान्भजशिवं
तिष्ठकाश्यांहृषंचर १३८ इत्युपादिश्यसुमहान्सुमेधास्तंसुमेधसं शिवंशिवांसमाराध्यमंत्रिणश्चोप
दिश्यसः १३९ ययौप्रतिष्ठानपुरंकलिंजित्वापिधीरधीः १४० शिष्यउवाच॰ उपदेशोमंत्रिणांकःकृतो
राज्ञांसुमेधसा तंश्रोतुमहमिच्छामिविविच्यब्रूहिसंमतम् १४१ गुरुरुवाच॰ महासेनंजितंदृष्ट्वामंत्रि

का॰म॰ स्वात्कलिः १६१ चचारपृथिवीमेतांद्रुहिणाज्ञाकरः सदा १६२ ॥इतिश्रीब्रह्मवैवर्तेकाशीमाहात्म्ये
२९ पंचमोऽध्यायः ५ ॥ मुनयऊचुः॥सूतसूतमहाबुद्धेश्रुतंत्वत्तः सनातनं ब्रह्मज्ञानंजीवपाशच्छेदनंमु
क्तिदायकम् १ परंत्वेकंतुपृच्छामोब्रूहितत्त्वंशुभानन विनासांख्येनयोगेनविनाऽष्टांगैर्महामखैः २
विनातपोभिरत्युग्रैर्विनातीर्थपरिभ्रमैः विना व्रताद्यैःशारीरैर्विनादानैर्विनाजपैः ३ सिद्ध्येन्निर्वाणभो
22 गादिःसिद्धोधर्मोमहामते येनसाधनसारेणतत्पुनर्वक्तुमर्हसि ४ सत्यादिषुयुगेष्वेवसमोधर्मःसना
तनः यःसदाप्राणिमात्राणांसिद्धोत्सिद्धिषुयःपरः ५ तंधर्मंश्रोतुमिच्छामःकलौखलुविशेषतः साक्षा
त्कारःकृतेदुःखंब्रह्मणःकिंपुनःकलौ ६ कलावपिजनाजीर्णेज्ञानंतत्फलमेवंच प्राप्नुयुर्मोक्षममलमित्या रा॰म॰
श्चर्यंवदस्वनः ७ सूतउवाच॰ शृण्वंतुमुनयःसर्वेब्रह्मज्ञानस्यकारणं कपिलेनेरितंसर्वंश्रुतिसारं २९
नृणामिह ८ कपिलःश्रीहरेःसाक्षात्स्वरूपज्ञःसनातनः हरिरेवमहासिद्धःसिद्धैःपृष्टःकदाचन ९

नःशांताविरक्ताधर्मबुद्धयः नसंतितस्माद्धिकलिःपुरुषार्थविघातकः १५२ अतोजनैर्विरक्तैश्चभवितव्यं
कलौबलात् यथामंगलमप्येतत्काश्यांशंकरतुष्टये १५३ दीपकउवाच० जयदेवमहाज्ञानदायकश्रु
तिविग्रह जयमायामहापाशच्छेदकध्वांतनाशन १५४ स्वामिप्रसादाद्देवेशपार्वतीवल्लभःशिवः दृष्टो
जनार्दनःश्रीशोब्रह्माद्यादेवसत्तमाः १५५ अहोभगवताकाशीदर्शितासर्वमुक्तिदा स्वरूपंचमहाका
श्याःश्रावितंपुरुषार्थदम् १५६ कृतार्थोस्मिकृतार्थोस्मिकृतार्थोस्मिजगद्गुरो नमामिदेवदेवेशंत्वांस
र्वज्ञं द्विजम् १५७ ब्रह्मोवाच० इत्युक्त्वादीपकःसेवांगुरोःकुर्वन्नवस्थितः काश्यांशृण्वन्शुभाः
काश्याःकथाःपावनपावनाः १५८ इतिएवंत्वयायत्कलेःप्रोक्तंतवाग्रतः निर्भयस्त्वंभवंगच्छस्वका
र्यंकुरुसादरम् १५९ सूतउवाच० इतिसंश्राविनःशिष्योब्रह्मणाकाशिसत्कथाः पितामहंनमस्कृत्य
भारतंप्रविवेशह १६० स्वस्वरूपंकाशिरूपंविष्णुशंकरयोरपि धर्माधर्मस्वरूपंचज्ञात्वाब्रह्ममु

रा.म. शान्तोपन्नदेहेतिष्ठतिनित्यंप्रभवश्चसिद्धाः २१ कृतन्नवैराग्यविवेकधर्ममोक्षेषुचिंतासहजेषुकस्मि
३० मा २२ मोक्षस्यबीजंपरमस्तिचैकंप्रियःपरेशोभगवान्कथंचित् हरिः प्रियःस्याद्यदिवाहरोहितथा
यथाविषयामोक्षरूपाः २३ अकस्मिमामीत्तिरुदेतिसर्वदाकामेषुकामारिसुरारिवर्जिता शास्त्रैर्गुरू
पासनतोनलुब्धैस्तदुक्तधर्माचरणैर्नराणाम् २४ हरौहरेवापरमात्मनिर्गुणेगुरौरतिःस्याद्धितदाकदा
चित् श्रुतेषुशास्त्रेष्वपिनोकदापिहिनिश्चितबुद्धिरधर्मवर्तिनाम् २५ कलौभवेद्धर्मविवर्जितेन्न
23 णांकुतःपुनःश्रवणंनास्तियेषां २६ सिद्धाःशृणुतभद्रंवःसारात्सारंवदाम्यहम् नारदायपुराप्रोक्तंनर
नारायणेनहि २७ नहितत्पापजीवानांहृदयेपरितिष्ठति तस्मान्महत्सुवक्तव्यंगुरुदेवेषुनित्यशः २८ राम.
कदाचिन्नारदःप्राप्तोनरनारायणाश्रमं नारायणंमहात्मानंपप्रच्छेजगतोहितम् २९ नारदउवाच. ३०
भगवन्श्रोतुमिच्छामिनृणामासुशुभप्रदं वदकिंचिद्धिचित्रार्थंयेनशुद्धिपराभवेत् ३० रागद्वेषैःपीड्य

त्वयाखलुमहादेवमहायोगेश्वरेश्वर. साधनानिबहून्यत्रप्रोक्तानिमनसः शुचौ १० असकृत्तानिस
वीणिसाधनानिकृतानिभो तथापिमनसः शुद्धिर्जायतेनकदाचन ११ जीवानांमोक्षवार्तापिकथं
स्याद्विषयात्मनां अहोपापच्यमानानांनरकेगर्भसंकटे १२ यातनाविविधाः श्रुत्वादृष्ट्वाचसभया
वयं विहायसर्वमस्माभिर्मनसःशुद्धकृत श्रमः १३ तथापिनमनः शुद्धं विषसंस्कारवासितं मनःशुद्धिं
विनाज्ञानंजायतेनकथंचन १४ ज्ञानंविनानसिद्ध्येत्तजनःकल्पशतैरपि तस्मान्मोक्षकथादूरेस्थि
तेतिप्रतिभातिनः १५ एकएवशरण्यस्त्वंशरणागतवत्सल १६ श्रीकपिलउवाच० साधुपृष्टंमहा
सिद्धाःसिद्धिःसत्यंसुदूरतः तथापियत्नोनत्याज्योनरैर्मोक्षेच्छुभिः सदा १७ विषयाकाररूपेयंमहा
विघ्नासुदुर्जया तच्छनैर्विषयान्सर्वान्नोक्षेतेश्वरनाश्रितः १८ विषयैर्देहचित्तानांनमृतिर्नहिजीवनम्
शोकसंतापजनकानुपेक्षेतशनैःशनैः १९ सहसाविषयास्त्यक्ष्यन्यातिजीवःशुद्धैन्यताम् २० कामाद्यः

24

जगामकिलकाशिकाम् ७६ ॥ इतिश्रीकाशीमाहात्म्येषष्ठोऽध्यायःसमाप्तः ६॥
समाप्तश्चायंग्रंथः ॥ सम्पूर्णम् ॥ शुभम्भूयात् ॥ श्रीरस्तु ॥ शुभमस्तु ॥:
॥ श्रीकाशीविश्वनाथपुरीमे दिवाकरछापाखानेमे यहपोथीछपी शीवचरनके ।
इहा साकीन मुहल्लेमदैनी कालीमहलकेपास लौ॰ विश्वेसरउपाध्या॰ का॰ बद
ल जीसकोलेनाहोयउसकोकुंजगलीकेपश्चिमफाटकपर शीवचरनसावकेदुका
नपरमीलेगी ॥ सं॰ १९३६ ॥ आषाढबदी ६ शुकरवार ॥ स॰ १८७९ ता॰ १३ जुलाई

तेविगतभारजीवनःशांतिमाप्यपरशांतिभाजनम् ६६ एकेनजन्मनाकाश्यांनिर्वाणंसमवाप्यते अन्तःप
रंकःसुगमउपायःसाधनैर्विना ६७ हत्यायैर्दूरतःकाश्यांतेपुण्याःपापशत्रवः स्वस्थायैस्तेपिचततःश्रे
याशोक्षैकभाजनम् ६८ एकरात्रस्थितायेतु पुण्यसंभारसंततिः तेषांप्रवर्द्धतेनित्यंमाससंवत्सरक्रमैः
६९ उत्तरोत्तरमायातिवृद्धिंधर्मैर्यथाक्रमैः मनोयत्रनिषिक्तंहिरतिस्तत्रकरोतिहि ७० मनसासुविचार्या
शुसारंसारगसम्मतः महासारतरंकाशींनत्यजेत्सारकामुकः ७१ अतोमनःकाशिकायांलग्नंमोक्षंप्र
दर्शयेत् अन्यत्रलग्नंसुदृढंदुःखमूलंप्रदर्शयेत् ७२ शास्त्रयुक्तिरियंप्रोक्तामुमुक्षूणांसुखप्रदा न
शास्त्रपरदृष्टीनांज्ञानंभवतिशाश्वतम् ७३ गुरुशास्त्रपरोमार्गःसाध्यःसाधकपुंगवैः अशास्त्रपरबु
द्धीनांनविचारःकथंचन ७४ इतिसम्यक्समाख्यातंमयासुशुभदंमुने अत्रनिश्चयवान्भूयान्निश्चयः
फलदायकः ७५ कपिलउवाच० इतिनारायणमुखात्श्रुत्वाकमलजोद्भवः रणयन्महतींगायन्